पतिः प्राप्तमहाकल्याणपंचकः । महाप्रभुर्महाप्रातिहार्या-
धीशो महेश्वरः ॥ १२ ॥

॥ इति वृक्षादिशतम् ॥ ५ ॥

चारुनीरगंधशालितंदुलप्रफुल्लकैः ।
सच्चरुप्रदीपधूपसत्फलैर्महार्घकैः ॥
देवदेव वीतराग संश्रीवृक्षकं शतं ।
अर्चयामि पापतापनाशनं सुखप्रदं ॥ ५ ॥

ॐ ह्रीं अर्हं सहस्रनामपूजिताय अर्घं निर्वपामि स्वाहा ॥

महामुनिर्महामौनी महाध्यानी महादमः । महाक्षमो महाशीलो महायज्ञो महामखः ॥ १ ॥ महाव्रतपतिर्मह्यो महाकांतिधरोऽधिपः । महामैत्रीमयोऽमेयो महोपायो महोमयः ॥ २ ॥ महाकारुणिको मंता महामंत्रो महायतिः । महानादो महाघोषो महेज्यो महसां पतिः ॥ ३ ॥ महाध्वरधरो धुर्यो महौदार्यो महेष्टवाक् । महात्मा महसा धाम महर्षिर्महितोदयः ॥ ४ ॥ महाक्लेशांकुशः शूरो महाभूतपतिर्गुरुः । महापराक्रमोऽनंतो महाक्रोधरिपुर्वशी ॥५॥ महाभवाब्धिसंतारी महामोहाद्रिसूदनः । महागुणाकरः क्षांतो महायोगीश्वरः शमी ॥ ६ ॥ महाध्यानपतिर्ध्याता महाधर्मा महाव्रतः । महाकर्मारिहात्मज्ञो महादेवो महेशिता ॥ ७ ॥ सर्वक्लेशापहः साधुः सर्वदोषहरो हरः असंख्येयोऽप्रमेयात्मा शमात्मा प्रशमाकरः ॥ ८ ॥ सर्व

योगीश्वरोऽचिंत्यः श्रुतात्मा विष्टरश्रवाः । दांतात्मा दम-तीर्थेशो योगात्मा ज्ञानसर्वगः ॥ ९ ॥ प्रधानात्मा प्रकृतिः परमः परमोदयः । प्रक्षीणबंधः कामारिः क्षेमकृत्क्षेमशासनः ॥१०॥ प्रणवः प्रणयः प्राणः प्राणदः प्रणतेश्वरः । प्रमाणं प्रणिधिर्दक्षो दक्षिणोऽध्वर्युरध्वरः ॥ ११ ॥ आनंदो नंदनो नंद्यो वंद्योऽनिंद्योऽभिनंदनः । कामहा कामदः काम्यः कामधेनुररिंजयः ॥ १२ ॥

॥ इति महामुन्यादिशतम् ॥ ६ ॥

नीरैर्नीरजवासितैः प्रविमलैर्गंधै सुगंधैर्वरैः ।
अक्षुण्णैः कलमाक्षतैः परिमलैः पुष्पैः सुभक्ष्यामृतैः ॥
दीपैर्धूपफलै· महार्घ्यममलं देवं यजामो वयम् ।
नाम्ना तत्सुखदं महामुनिशतं संसारदुःखापहं ।

ॐ ह्रीं अर्हं सहस्रनामपूजिताय अर्घं निर्वपामि स्वाहा ।

असंस्कृतः सुसंस्कारः प्राकृतो वै कृतांतकृत् । अंतकृत् कांतिगुः कांतश्चिंतामणिरभीष्टदः ॥ १ ॥ अजितो जित-कामारिरमितोऽमितशासनः । जितक्रोधो जितामित्रो जित-क्लेशो जितांतकः ॥२॥ जिनेंद्रः परमानंदो मुनींद्रो दुंदुभि-स्वनः । महेंद्रवंद्यो योगींद्रो यतींद्रो नाभिनंदनः ॥ ३ ॥ नाभेयो नाभिजो जातः सुव्रतो मनुरुत्तमः । अभेद्योऽनत्य-योऽनाश्वानधिकोऽधिगुरुः सुगीः ॥ ४ ॥ सुमेधा विक्रमी स्वामी दुराधर्षो निरुत्सकः । विशिष्टः शिष्टभुक् शिष्टः प्रत्ययः कामनोऽनघः ॥ ५ ॥ क्षेमी क्षेमंकरोऽक्षय्यः क्षेत्रः

धर्मपतिः क्षमी । अग्राह्यो ज्ञाननिग्राह्यो ध्यानगम्यो निरु-
त्तरः ॥ ६ ॥ सुकृती धातुरिज्यार्हः सुनयश्चतुराननः ।
श्रीनिवासश्चतुर्वक्त्रश्चतुरास्यश्चतुर्मुखः ॥ ७ ॥ सत्यात्मा
सत्यविज्ञानः सत्यवाक्सत्यशासनः । सत्याशीः सत्यसंधानः
सत्यः सत्यपरायणः ॥ ८ ॥ स्थेयान्स्थवीयान्नेदीयान्दवी-
यान्दूरदर्शनः । अणोरणीयाननणुर्गुरुराद्यो गरीयसाम् ॥९॥
सदायोगः सदाभोगः सदातृप्तः सदाशिवः । सदागतिः
सदासौख्यः सदाविद्यः सदोदयः ॥ १० ॥ सुघोषः सुमुख-
सौम्यः सुखदः सुहितः सुहृत् । सुगुप्तो गुप्तिभृद्गोप्ता
लोकाध्यक्षो दमीश्वरः ॥ ११ ॥

॥ इति अनंस्कृतादिशतम् ॥ ७ ॥

वनमलयजशालितंडुलफुल्लान्नदीपधूपफलनिवहैः ।
प्रणत नरामराधिपदेवमसंस्कृतं नाम शतं पूजये भक्त्या ।

ॐ ह्रीं अर्हं नहलनामपूजिताय अर्घं निर्वपामि स्वाहा ।

बृहन्बृहस्पतिर्वाग्मी वाचस्पतिरुदारधीः । मनीषी
धिषणो धीमाञ्छेमुशीषो गिरांपतिः ॥ १ ॥ नैकरूप
नयस्तुंगो नैकात्मा नैकधर्मकृत् । अविज्ञेयोऽप्रतर्क्यात्म
कृतज्ञः कृतलक्षणः ॥ २ ॥ ज्ञानगर्भो दयागर्भो रत्नगर्भ
प्रभास्वरः । पद्मगर्भो जगद्गर्भो हेमगर्भः सुदर्शनः ॥ ३ ॥
लक्ष्मीवांस्त्रिदशाऽध्यक्षो दृढीयानिन ईशिता । मनोहरो
मनोज्ञांगो धीरो गंभीरशासनः ॥ ४ ॥ धर्मयूपो दयायागो
धर्मनेमिर्मुनीश्वरः धर्मचक्रायुधो देवः कर्महा धर्मघोषण

॥५॥ अमोघवागमोघाज्ञो निर्मलोऽमोघशासनः। सुरूपः सुभगस्त्यागी समयज्ञः समाहितः ॥ ६ ॥ सुस्थितः स्वास्थ्यभाक्स्वस्थो नीरजस्को निरुद्धवः। अलेपो निष्कलंकात्मा वीतरागो गतस्पृहः ॥ ७ ॥ वश्येन्द्रियो विमुक्तात्मा निःसपत्नो जितेन्द्रियः। प्रशान्तोऽनन्तधामर्षिर्मंगलं मलहाऽनघः ॥ ८ ॥ अनीदृगुपमाभूतो दिष्टिर्दैवमगोचरः। अमूर्तो मूर्तिमानेको नैको नानैकतत्त्वदृक् ॥९॥ अध्यात्मगम्योऽगम्यात्मा योगविद्योगिवन्दितः। सर्वत्रगः सदाभावी त्रिकालविषयार्थदृक्। शंकरः शंवदो दान्तो दमी क्षांतिपरायणः। अधिपः परमानन्दः परात्मज्ञः परात्परः ॥ ११ ॥ त्रिजगद्वल्लभोऽभ्यर्चस्त्रिजगन्मंगलोदयः। त्रिजगत्पतिपूज्यांघ्रिस्त्रिलोकाग्रशिखामणिः ॥ १२ ॥

॥ इति बृहदादिशतम् ॥ ८ ॥

वार्भिस्सुगंधैः सदकैर्मनोज्ञैः। पुष्पैर्हविर्भक्ष्यविचित्रदीपैः ॥
धूपैः सुधूम्रान्वितसत्फलौघैः। देवं बृहन्नामशतं यजेऽहं ८

ॐ ह्रीं अर्हं सहस्रनामपूजिताय अर्घं निर्वपामि स्वाहा ॥

त्रिकालदर्शी लोकेशो लोकधाता दृढव्रतः। सर्वलोकातिगः पूज्यः सर्वलोकैकसारथिः ॥ १॥ पुराणपुरुषः पूर्वः कृतपूर्वांगविस्तारः। आदिदेवः पुराणाद्यः पुरुदेवोऽधिदेवता ॥२॥ युगमुख्यो युगज्येष्ठो युगादिस्थितिदेशकः। कल्याणवर्णः कल्याणः कल्यः कल्याणलक्षणः ॥ ३ ॥ कल्याणप्रकृतिर्दीप्तकल्याणात्मा विकल्मषः। विकलंकः कलातीतः

कलिलघ्नः कलाधरः ॥ ४ ॥ देवदेवो जगन्नाथो जगद्बन्धु-
र्जगद्विभुः । जगद्धितैषी लोकज्ञः सर्वगो जगदग्रजः ॥ ५ ॥
चराचरगुरुर्गोप्यो गूढात्मा गूढगोचरः । सद्योजातः प्रका-
शात्मा ज्वलज्ज्वलनसंप्रभः ॥ ६ ॥ आदित्यवर्णो भर्माभः
सुप्रभः कनकप्रभः । सुवर्णवर्णो रुक्माभः सूर्यकोटिसमप्रभः
॥ ७ ॥ तपनीय निभस्तुंगो बालार्काभोऽनलप्रभः । संध्याभ्र-
बभ्रुर्हेमाभस्तप्तचामिकरप्रभः ॥ ८ ॥ निष्टप्तकनकच्छायः
कनत्काञ्चनसन्निभः । हिरण्यवर्णः स्वर्णाभः शातकुम्भनिभ-
प्रभः ॥ ९ ॥ द्युम्नाभो जातरूपाभो तप्तजाम्बूनदद्युतिः ।
सुधौतकलधौतश्रीः प्रदीप्तो हाटकद्युतिः ॥ १० ॥
शिष्टेष्टः पुष्टिदः पुष्टः स्पष्टः स्पष्टाक्षरक्षमः । शत्रुघ्नोऽ
प्रतिघोऽमोघः प्रशास्ता शासिता स्वभूः ॥ ११ ॥ शान्ति-
निष्ठो मुनिज्येष्ठः शिवतातिः शिवप्रदः । शान्तिदः शान्ति
कृच्छान्ति कांतिमान्कामितप्रदः ॥ १२ ॥ श्रेयोनिधि-
रधिष्ठानमप्रतिष्ठः प्रतिष्ठितः । सुस्थितः स्थावरः स्थाणु
प्रथीयान्प्रथितः पृथुः ॥ १३ ॥

॥ इति त्रिकालदर्श्यादिशतम् ॥ ९ ॥

नीरैः सुगंधैः कलमाक्षतौघैः । पुष्पैर्वरैश्चारुहविः प्रदीपैः
धूपैर्दशांगैःसुफलैर्मनोज्ञैः । यजे शतं नाम त्रिकालदर्शी ॥९

ॐ ह्रीं अर्हं सहस्रनामपूजिताय अर्घं निर्वपामि स्वाहा ॥

दिग्वासा वातरशनो निर्ग्रन्थेशो निरम्बरः । निष्कि
ञ्चनो निराशंसो ज्ञानचक्षुरमोमुहः ॥ १ ॥ तेजोराशि

नन्तौजा ज्ञानाब्धिः शीलसागरः । तेजोमयोऽमितज्योति-र्ज्योतिर्मूर्तिस्तमोऽपहः ॥ २ ॥ जगच्चूडामणिर्दीप्तः सर्ववि-घ्नविनायकः । कलिघ्नः कर्मशत्रुघ्नो लोकालोकप्रकाशकः ॥ ३ ॥ अनिद्रालुरतंद्रालुर्जागरूकः प्रमामयः । लक्ष्मीपति-र्जगज्ज्योतिर्धर्मराजः प्रजाहितः ॥ ४ ॥ मुमुक्षुर्बंधमोक्षज्ञो जिताक्षो जितमन्मथः । प्रशांतरसशैलूषो भव्यपेटकनायकः ॥ ५ ॥ मूलकर्ताखिलज्योतिर्मलघ्नो मूलकारणः । आप्तो वागीश्वरः श्रेयाञ्छ्रायासोक्तिर्निरुक्तवाक् ॥ ६ ॥ प्रवक्ता वचसामीशो मारजिद्विश्वभाववित् । सुतनुस्तनुनिर्मुक्तः सुगतो हतदुर्नयः ॥ ७ ॥ श्रीशः श्रीश्रितपादाब्जो वीत-भीरभयंकरः । उत्सन्नदोषो निर्विघ्नो निश्चलो लोक-वत्सलः ॥ ८ ॥ लोकोत्तरो लोकपतिर्लोकचक्षुरपारधीः । धीरधीर्बुद्धसन्मार्गः शुद्धः सूनृतपूतवाक् ॥ ९ ॥ प्रज्ञा-पारमितः प्राज्ञो यतिर्नियमितेंद्रियः । भदन्तो भद्रकृद्-भद्रः कल्पवृक्षो वरप्रदः ॥ १० ॥ सुमुन्मूलितकर्मारिः कर्मकाष्ठाशुशुक्षणिः । कर्मण्यः कर्मठः प्रांशुर्हेयादेयविच-क्षणः ॥ ११ ॥ अनंतशक्तिरच्छेद्यस्त्रिपुरारिस्त्रिलोचनः । त्रिनेत्रस्त्र्यंबकस्त्र्यक्षः केवलज्ञानवीक्षणः ॥ १२ ॥ समंत-भद्रः शांतारिधर्माचार्यो दयानिधिः । सूक्ष्मदर्शी जितानंगः कृपालुर्धर्मदेशकः ॥ १३ ॥ शुभंयुः सुखसाद्भूतः पुण्यरा-शिरनामयः । धर्मपालो जगत्पालो धर्मसाम्राज्यनायकः १४

॥ इति दिग्वासादिशतम् ॥ १० ॥

विमलजलसुगंधैरक्षतैः पुष्पजालैः ।
वरचरुवरदीपैर्धूपनानाफलैश्च ॥
जिनपतिवर दिग्वासःशतं पूजयेऽहं ।
प्रणतनरसुरेन्द्रं सौख्यदं तच्च भक्त्या ॥ १० ॥

ॐ ह्रीं अर्हं सहस्रनामपूजिताय अर्घं निर्वपामि स्वाहा ॥

धाम्नां पते तवामूनि नामान्यागमकोविदैः । समुच्चि-
त्यनुध्यायन्पुमान्पूतकृतिर्भवेत् ॥ १ ॥ गोचरोऽपि गिरामास
त्वमवाग्गोचरो मतः । स्तोता तथाप्यसंधिग्धं त्वत्तोऽभी-
ष्टफलं लभेत् ॥ २ ॥ त्वमतोऽसि जगद्बन्धुस्त्वमतोऽसि
जगद्भिषक् । त्वमतोऽसि जगद्धाता त्वमतोऽसि जगद्धित
॥ ३ ॥ त्वमेकं जगतां ज्योतिस्त्वं द्विरूपोपयोगभाक् । त्व
त्रिरूपैकमुक्त्यंगं स्वोत्थानंतचतुष्टयः ॥ ४ ॥ त्वं पंच-
ब्रह्मतत्त्वात्मा पंचकल्याणनायकः । षड्भेदभावतत्त्वज्ञस्त्व
सप्तनयसंग्रहः ॥ ५ ॥ दिव्याष्टगुणमूर्तिस्त्वं नवकेवलल-
ब्धिकः । दशावतारनिर्धार्यो मां पाहि परमेश्वर ॥ ६ ॥
युष्मन्नामावलीदृब्धविलसत्स्तोत्रमालया । भवंतं वरिव-
स्यामः प्रसीदानुग्रहाण नः ॥ ७ ॥ इदं स्तोत्रमनुस्मृत्य
पूतो भवति भाक्तिकः । यः स पाठं पठत्येनं स स्यात्क-
ल्याणभाजनम् ॥ ८ ॥ ततः सदेदं पुण्यार्थी पुमान्पठति
पुण्यधीः । पौरुहूतीं श्रियं प्राप्तुं परमामभिलाषुकः ॥९॥
स्तुत्वेति मघवा देवं चराचरजगद्गुरुं । ततस्तीर्थविहारस्य
व्यधात्प्रस्तावनामिमाम् ॥ १० ॥ स्तुतिः पुण्यगुणोत्कीर्ति

स्तोता भव्यः प्रसन्नधीः । निष्ठितार्थो भवांस्त्युत्यः फलं
नैश्रेयसं सुखं ॥ ११ ॥ यः स्तुत्यो जगतां त्रयस्य न पुनः
स्तोता स्वयं कस्यचित् । ध्येयो योगिजनस्य यश्च नितरां
ध्याता स्वयं कस्यचित् ॥ यो नेतॄन् नयते नमस्कृतिमलं
नंतव्यपक्षेक्षणः । स श्रीमान् जगतां त्रयस्य च गुरुर्देवः
पुरुः पावनः ॥ १२ ॥ तं देवं त्रिदशाधिपार्चितपदं घाति-
क्षयानंतरं । प्रोत्थानंतचतुष्टयं जिनमिमं भव्याब्जिनीना-
मिनम् । मानस्तंभविलोकनानतजगन्मान्यं त्रिलोकीपतिं ।
प्राप्ताचिंत्यबहिर्विभूति मनघं भक्त्या प्रवंदामहे ॥ १३ ॥

( इति धाम्नापत्यादिशतम् )

पनीयचंदनसदक्षतचारुपुष्पैः ।
नैवेद्यदीपवरधूपफलैर्विचित्रैः ॥
संस्थापितैः कनकनिर्मितचारुपात्रे ।
धाम्नां शतं सुखकरं परिपूजयामि ॥ ११ ॥

ॐ ह्रीं अर्हं सहस्रनामपूजिताय अर्घं निर्वपामि स्वाहा ॥

पूर्णार्घं

अष्टाधिकोत्तरसहस्रसुनामभाज- ।
स्तीर्थेशिनः शतमुखैः शतसेव्यमानान् ॥
इत्यर्चितस्य वसुद्रव्ययुतार्घदानैः ।
संघस्य संतु सततं वरमंगलानि ॥

ॐ ह्रीं सहस्रनामपूजिताय पूर्णार्घं निर्वपामि स्वाहा ।
पुष्पांजलिम् ।

॥ इति श्रीजिनसहस्रनामस्तवन समाप्तम् ॥

# पंचपूजा

## अधिवासन व पूजा.

( प्रथम अधिवासन म्हणून पंचपूजा सुरू करावी. )

श्रीवीतरागममृतेशमनंतबोधं ।
ब्रह्मादिदेवनुतपादसरोजयुग्मं ॥
भक्त्या प्रणम्य जिनराजमहं समासात् ।
वक्ष्ये जिनेंद्रस्तवनं तनुधीसमेतः ॥ १ ॥
रागादिदोषरहितं सुरराजवं ।
नत्वा जिनेशमखिलामलयोगिसेव्यं ॥
पुष्पांजलिं जिनमखे वरमुत्क्षिपामि ।
श्रीमूलसंघवरभव्यजगत्प्रशांत्यै ॥ २ ॥

इति प्रस्तावनाय पुष्पांजलि ।

मंगलं भगवानर्हन्मंगलं भगवाञ्जिनः ।
मंगलं प्रथमाचार्यो मंगलं वृषभेश्वरः ।
मंगलं प्रथमं लोकेषूत्तमं शरणं जिनं ।
नत्वायमर्हतः पूजाक्रमः स्याद्विधिपूर्वकं ॥ ४ ॥
विज्ञानं विमलं यस्य भासते विश्वगोचरं ।
नमस्तस्मै जिनेन्द्राय सुरेंद्राभ्यर्चितांघ्रये ॥ ३ ॥
ॐ जय जय जय नमोऽस्तु नमोऽस्तु नमोऽस्तु ।
ॐ णमो अरहंताणं णमो सिद्धाणं णमो आइरियाणं ।
णमो उवज्झायाणं णमो लोए सव्वसाहूणं ॥ ६ ॥

श्रीमज्जिनेन्द्रकथिताय सुमंगलाय ।
लोकोत्तमाय शरणाय विनेयजंतोः ।।
धर्माय कायवचनाय विशुद्धितोऽहं ।
स्वर्गापवर्गफलदाय नमस्करोमि ।। ७ ।।
अपवित्रः पवित्रो वा सुस्थितो दुःस्थितोऽपि वा ।
ध्यायेत्पंचनमस्कारं सर्वपापैः प्रमुच्यते ।। ८ ।।
अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यः स्मरेत्परमात्मानं स बाह्याभ्यंतरे शुचिः ।। ९ ।।

ॐ ह्रां ह्रीं ह्रूं ह्रौं ह्रः अ सि आ उ सा मम सर्वांगशुद्धिं करोमि स्वाहा ।।

( हा मंत्र म्हणून पूजकांनी आपल्या सर्वांगावर जल अथवा गंधोदक सिंचन करावे. )

अद्याभवत्सफलता नयनद्वयस्य ।
देव त्वदीयचरणांबुजवीक्षणेन ।।
अद्य त्रिलोकतिलक प्रतिभासते मे ।
संसारवारिधिरयं चुलुकप्रमाणः ।। १० ।।
अद्य मे क्षालितं गात्रं नेत्रे च विमले कृते ।
स्नातोऽहं धर्मतीर्थेषु जिनेंद्र तव दर्शनात् ।। ११ ।।
अपराजितमंत्रोऽयं सर्वविघ्नविनाशनः ।
मंगलेषु च सर्वेषु प्रथमं मंगलं भवेत् ।। १२ ।।
एस पंचणमोक्कारो सव्वपावप्पणासणो ।
मंगलाणं च सव्वेसिं पढमं होइ मंगलं ।। १३ ।।

ॐ चत्तारिमंगलं अरहंत मंगलं सिद्ध मंगलं साहू मंगलं केवलिपण्णतो धम्मो मंगलं । चत्तारि लोगुत्तमा अरहंतलोगुत्तमा सिद्धलोगुत्तमा साहूलोगुत्तमा केवलि-पण्णतो धम्मोलोगुत्तमा । चत्तारि सरणं पव्वज्जामि अरहंत सरणं पव्वज्जामि सिद्ध सरणं पव्वज्जामि साहू सरणं पव्वज्जामि केवलिपण्णतो धम्मो सरणं पव्वज्जामि ॐ नमोऽर्हते स्वाहा ॥ १४ ॥

( नमस्कार करणें )

श्रीमज्जिनेंद्रमभिवंद्य जगत्त्रयेशं ।
स्याद्वादनायकमनंतचतुष्टयार्हं ।
श्रीमूलसंघसुदृशां सुकृतैकहेतु- ।
र्जैनेंद्रयज्ञविधिरेष मयाऽभ्यधायि ॥

स्वस्ति त्रिलोकगुरवे जिनपुंगवाय ।
स्वस्ति स्वभावमहिमोदयसुस्थिताय ॥
स्वस्ति प्रकाशमहिमोर्जितदिङ्मुखाय ।
स्वस्ति प्रसन्नललिताद्भुतवैभवाय ॥ १६ ॥

स्वस्ति ज्वलद्विमलबोधसुधाप्लवाय ।
स्वस्ति स्वभावपरभावविभासकाय ॥
स्वस्ति त्रिलोकविदितोज्वलचिन्मयाय ।
स्वस्ति त्रिकालसकलायतिविश्रुताय ॥ १७ ॥

अर्हन् पुराणपुरुषोत्तम पावनानि ।

वस्तून्यनल्पमहिमान्यहमेक एव ॥
अस्मिन् ज्वलद्विमलकेवलबोधवह्नौ ।
पुण्योदयाग्रमहिमैकमना जुहोमि ॥ १८ ॥

द्रव्यस्य शुद्धिमधिगम्य यथानुरूपं ।
भावस्य शुद्धिमधिकामधिगंतुकामः ॥
आलंबनानि विविधान्यवलंब्य वल्गन् ।
भूतार्थयज्ञपुरुषस्य करोमि यज्ञं ॥ १९ ॥

ह्री विधियज्ञप्रतिज्ञापनाय श्रीजिनप्रतिमाग्रे पुष्पांजलिम् क्षिपेत् ।

---

## अथ पंचपूजा

ॐ चिद्रूपं विश्वरूपं व्यतिकरितमनाद्यन्तमानं-सान्द्रम् । यत्प्राक्तंस्तैर्विवर्तैर्विवृततदधिपतैर्दुःखसौख्या-भमानैः । कर्मोद्रेकात्तदात्मप्रतिघमभिदोद्भिन्ननिःसीम-तेजः । प्रत्यासीदत्परोजः स्फुरदिह परमब्रह्म यज्ञेऽहमा-व्हम् ॥ १ ॥

ॐ ह्री विधियज्ञप्रतिज्ञापनाय श्रीजिनप्रतिमाग्रे पुष्पांजलिम् क्षिपेत् ।

अर्हंत्पूजा

श्रीवृषभादि विरान्तिमा चोविसौं जिनराय ।
आव्हानन ठाडे करूं तीन भेद गुण गाय ॥ १ ॥

ॐ ह्रीं अर्हं श्रीपरब्रह्मणे अत्रावतरावतर संवौषट् स्वाहा । आह्वानन । अत्र तिष्ठ तिष्ठ ठः ठः स्थापनं । अत्र मम सन्निहितो भव भव वषट् स्वाहा ॥

कनककुंभभृतैर्जलपूरितैः । मलहरैर्वरसौरभपूरितैः ।
परियजे जिनपादपयोजकं । सकलप्राणभृतां सुखयोजकं ॥

ॐ ह्रीं अर्हं परब्रह्मणेऽनंतानंतज्ञानशक्तये जलं निर्वपामि स्वाहा ॥

मलयपर्वतजैः शुभचंदनैः । परिमलागतषट्पदचंदनैः ॥
परियजे जिनपादपयोजकं । सकलप्राणभृतां सुखयोजकं ॥

ॐ ह्रीं अर्हं अनंतानंतज्ञानशक्तये गंधं निर्वपामि स्वाहा ॥

अतिमनोहरसुशालिपुंजकैः । शशिकरैरिव दीर्घशरीरकैः ।
परियजे जिनपादपयोजकं । सकलप्राणभृतां सुखयोजकं ॥

ॐ ह्रीं अर्हं अनंतानंतज्ञानशक्तये अक्षतान् निर्वपामि स्वाहा ॥

कमलचंपकजातिसुकेतकी । वकुलपाटलपुष्पसमूहकं ।
परियजे जिनपादपयोजकं । सकलप्राणभृतां सुखयोजकं ॥

ॐ ह्रीं अर्हं अनंतानंतज्ञानशक्तये पुष्पं निर्वपामि स्वाहा ॥

घृतसुमोदकमंडलसंयुतैः । चरुवरैर्मणिभाजनसंस्थितैः ।
परियजे जिनपादपयोजकं । सकलप्राणभृतां सुखयोजकं ॥

ॐ ह्रीं अर्हं अनंतानंतज्ञानशक्तये पुष्पं निर्वपामि स्वाहा ॥

सुघनसारविशोभितदीपकैः । सुजनशोकविदाहनदक्षकैः ।
परियजे जिनपादपयोजकं । सकलप्राणभृतां सुखयोजकं ॥

ॐ ह्रीं अर्हं अनंतानंतज्ञानशक्तये दीपं निर्वपामि स्वाहा ॥

अगरुचंदनचंद्रविमिश्रितैः । विविधवस्तुभृतैर्घनधूपकैः ।
परियजे जिनपादपयोजकं । सकलप्राणभृतां सुखयोजकं ॥

ॐ ह्रीं अर्हं अनंतानंतज्ञानशक्तये धूप निर्वपामि स्वाहा ॥

फलभरैः कनकाम्रसुदाडिमैः । सुरसगंधरसेन मनोहरैः ।

परियजे जिनपादपयोजकं । सकलप्राणभृतां सुखयोजकं ॥

ॐ ह्रीं अर्हं अनंतानंतज्ञानशक्तये फल निर्वपामि स्वाहा ॥

तीर्थंकराणां कृतमष्टकाव्यं । श्रीराजपालेन कलिक्षतौघं ।

जलादियुक्तं कविनादिनोक्तं । मोक्षं तु सौख्यादि भणंतु भव्याः ॥ ९ ॥

ॐ ह्रीं अर्हं अनंतानंतज्ञानशक्तये अर्घ निर्वपामि स्वाहा ॥

ततो जिनेंद्रपादांते वारिधारां निपातये ।

भृंगारनालिकोद्भ्रान्तां जिनमल्लोकशांतये ॥ १० ॥

शांतये शांतिधारा ॥

समस्तघातिमर्दनं, जिनेंद्रवृंदमुज्वलं ।

नवीनमालतिर्दलैर्यजामि मुक्तिसिद्धये ॥

पुष्पांजलिं क्षिपेत् ॥

श्रीशतेंद्रयोगिवृंदवंद्यपादपंकजं ।

शाश्वतेद्धबोधदृष्टिवीर्यसौख्यभासुरं ॥

सुप्रशस्तयोगदग्धघातिकर्मवैरिणां ।

भूप्रशस्तनाथमर्हदेवमर्चयाम्यहं ॥

ॐ ह्रीं अर्हं सिद्धाचार्योपाध्यायसर्वसाधुभ्यो नमः स्तोभार्घं ॥ जाप्य ९

जयमाला

वंदे तानमरप्रवेकमुकुटप्रोत्तारणप्रस्फुर-

द्धामस्तोमविमिश्रिताः पदनखाभीषूत्करा रेजिरे ॥

येषां तीर्थंकरेशिनां सुरसरिद्वारिप्रवाहोल्लुठ- ।
द्दिव्यद्देवनितंबिनीस्तनगलत्काश्मीरपूरा इव ॥ १ ।
वृषभं त्रिभुवनपतिशतवंद्यं । मंदरगिरिमिव धीरमनिंद्यं ।
वंदे मनसिजगजमृगराजं राजिततनुमजितं जिनराजं ॥२।
संभवदुज्ज्वलगुणमहिमानं । संभवजिनपतिमप्रतिमानं ॥
अभिनंदनमानंदितलोकं । विद्यालोकितलोकालोकं ॥ ३ ॥
सुमतिं प्रशमितकुनयसमूहं । निर्दलिताखिलकर्मसमूहं ॥
वंदे तं पद्मप्रभदेवं । देवासुरनरकृतपदसेवं ॥ ४ ॥
सेवकमुनिजनसुरतरुपार्श्वं । प्रणमामि प्रथितं च सुपार्श्वं ॥
त्रिभुवनजननयनोत्पलचंद्रं । चंद्रप्रभमघवर्जितचंद्रं ॥ ५ ॥

सुविधिं विबुधधवलोज्ज्वलकीर्तिं ।
त्रिभुवनजिनपतिकीर्तितमूर्तिं ॥
भूतल पतिनुतशीतलनाथं ।
ध्यानमहानलहुतरतिनाथं ॥ ६ ॥

स्पष्टानंतचतुष्टयनिलयं । श्रेयोजिनपतिमपगतनिलयं ॥
श्रीवसुपूज्यसुतं नुतपादं । भव्यजनप्रियदिव्यनिनादं ॥ ७ ॥
कोमलकमलदलायतनेत्रं । विमलं केवलसस्यसुक्षेत्रं ॥
निर्जितकंतुमनंतजिनेशं । वंदे मुक्तिवधूपरमेशं ॥ ८ ॥
धर्मं निर्मलशर्मापन्नं । धर्मपरायणजनताशरणं ॥
शांतिं शांतिकरं जनतायाः । भक्तिभरक्रमकमलनतायाः ।९
कुंथुं गुणमणिरत्नकरंडं । संसारांबुधितरणतरंडं ॥
अमरीनेत्रचकोरीचंद्रं । अरपरमं पदविनुतमहेंद्रं ॥ १० ॥

उद्धतमोहमहाभटमल्लं । मल्लिं फुल्लशरप्रतिमल्लं ॥
सुव्रतमपगदतोषनिकायं । चरणांबुजनुतदेवनिकायं ॥११॥
नौमि नमिं गुणरत्नसमुद्रं । योगिनिरूपितयोगसमुद्रं ॥
नीलश्यामलकोमलगात्रं । नेमिस्वामिनमेनोदात्रं ॥ १२ ॥
फणिफणमंडपमंडितदेहं । पार्श्वं निजहितगतसंदेहं ॥
वीरमपारचरित्रपवित्रं । कर्ममहीरुहमूललवित्रं ॥ १३ ॥
संसारप्रतिमप्रतिबोधं । परिनिष्क्रमणं केवलबोधं ॥
परिनिष्ठतसुखबोधितबोधं । सारासारविचारविबोधं ।१४।
वंदे मंदरमस्तकपीठे । कृतजन्माभिषवंनुतपीठे ॥
दर्शनांतविलब्धिविकरणं । केवलबोधामृतसुखकरणं ॥१५॥

घत्ता

अनणुगुणनिबद्धामर्हतां माघनंदि- ।
व्रतिरचितसुवर्णानेकपुष्पव्रजानां ॥
स भवति जयमालां यो विधत्ते स्वकण्ठे ।
प्रियपतिरमरश्रीमोक्षलक्ष्मीवधूनाम् ॥ १६ ॥

ॐ ह्रीं अर्हं अनंतानंतज्ञानशक्तये जयमाला अर्घं निर्वपामि स्वाहा ।

कल्याणं विजयोभद्रं । चिंतितार्थमनोरथं ॥
वीतरागप्रसादेन । सर्वे अर्था भवंतु ते ॥ १७ ॥

॥ इत्याशीर्वादः ॥

सिद्धपूजा

ॐ

ऊर्ध्वाधोरयुतं सबिंदु सपरं ब्रह्मस्वरावेष्टितं ॥

वर्गापूरितदिग्गतांबुजदलं तत्संधितत्त्वान्वितं ॥
अंतःपत्रतटेष्वनाहतयुतं ह्रींकारसंवेष्टितं ॥
देवं ध्यायति यः स मुक्तिसुभगो वैरीभकंठीरवः ॥

ॐ ह्री अनाहतपराक्रमसहिताय श्रीसिद्धचक्राधिपतये अत्र अवतरावतर संवौषट् । अत्र तिष्ठ तिष्ठ ठ ठ । अत्र मम सन्निहितो भव भव वषट् स्वाहा ॥

निजमनोमणिभाजनभारया । समरसैकसुधारसधारया
सकलबोधकलारमणीयकं । सहजसिद्धमहं परिपूजये ॥१॥

ॐ ह्रीं अनाहतपराक्रमाय सकलकर्मविनिर्मुक्ताय सिद्धचक्राधिपतये जलं निर्वपामि स्वाहा ॥

सहजकर्मकलंकविनाशनैः । अमलभावसुवासितचंदनैः ।
अनुपमानगुणावलिनायकं । सहजसिद्धमहं परिपूजये ॥२॥

ॐ ह्रीं अनाहतपराक्रमाय सिद्धचक्राधिपतये गंधं निर्वपामि स्वाहा ॥

सहजभावसुनिर्मलतंडुलैः । सकलदोषविशालविशोधनैः ॥
अनुपरोधसुबोधनिधानकं । सहजसिद्धमहं परिपूजये ॥ ३ ॥

ॐ ह्रीं अनाहतपराक्रमाय सिद्धचक्राधिपतये अक्षतान् निर्वपामि स्वाहा ॥

समयसारसुपुष्पसुमालया । सहजशुद्धकरेण विशुद्धया ।
परमयोगबलेन वशीकृतं । सहजसिद्धमहं परिपूजये ॥ ४ ॥

ॐ ह्री अनाहतपराक्रमाय सिद्धचक्राधिपतये पुष्पं निर्वपामि स्वाहा ॥

अकृतबोधसुदिव्यनिवेद्यकैः । विहितजातिजरामरणांतकैः ।
निरवधिप्रवरात्मगुणालयं । सहजसिद्धमहं परिपूजये ॥ ५ ॥

ॐ ह्रीं अनाहतपराक्रमाय सिद्धचक्राधिपतये नैवेद्यं निर्वपामि स्वाहा ॥

सहजरत्नसुभावसुदीपकैः । रुचिविभूतितमःप्रविनाशनैः ॥
निरवधिस्वविकाशप्रकाशनैः । सहजसिद्धमहं परिपूजये ।६।

ॐ ह्रीं अनाहतपराक्रमाय सिद्धचक्राधिपतये दीपं निर्वपामि स्वाहा ॥

निजगुणाक्षयरूपसुधूपनैः । स्वगुणघातिमलप्रविनाशनैः ।
विशदबोधसुदीर्घसुखात्मकं । सहजसिद्धमहं परिपूजये ॥७॥

ॐ ह्रीं अनाहतपराक्रमाय सिद्धचक्राधिपतये धूपं निर्वपामि स्वाहा ॥

परमभावफलावलिसारया । सहजभावकुभावविशुद्धया ॥
निजगुणस्फुरणात्मनिरंजनं । सहजसिद्धमहं परिपूजये ॥८॥

ॐ ह्रीं अनाहतपराक्रमाय सिद्धचक्राधिपतये फल निर्वपामि स्वाहा ॥

नेत्रोन्मीलविकाशभावनिवहैरत्यंतबोधात्मकैः ।
वार्गंधाक्षतपुष्पदामचरुकैर्दीपैः सुधूपैः फलैः ।
यश्चिंतामणिशुद्धभावपरमैर्ज्ञानात्मकैरर्च्यते ।
सिद्धस्वादमगाधबोधमचलं संचर्चयामो वयं ॥ ९ ॥

ॐ ह्रीं अनाहतपराक्रमाय सिद्धचक्राधिपतये अर्घं निर्वपामि स्वाहा ॥

इत्येवं सिद्धचक्रस्य पूजामष्टगुणान्वितां ॥
सुगंधद्रव्ययुक्तेन शांतिधारां करोम्यहं ॥ १० ॥

शांतये । शांतिधारा ॥

गुणाष्टकाद्यलंकृतं समस्तसिद्धनायकं ।
नमेरुपारिजातकैर्यजामि मुक्तिसिद्धये ॥ ११ ॥

पुष्पांजलिं क्षिपेत् ॥

अष्टकर्मविप्रमुक्तमष्टसद्गुणोज्वलं ।
दुष्टभावदुःखदूरमष्टमीधराग्रकं ॥
स्पष्टदुष्टलोककोकमर्चितं तुलोज्झितं ।
तोष्टवीमि निष्ठितार्थसिद्धसिद्धसंचयं ॥ १२ ॥

इति स्तोत्रार्घं ॥

ॐ ह्रीं अनाहतविद्यायै अ सि आ उ सा ह्रीं नमः ॥

जाप्य ९ अथवा १०८

जयमाला

त्रैलोक्येश्वरवंदनीयचरणाः प्रापुः श्रियं शाश्वतीं ।
यानाराध्य विशुध्दचंडमनसः संतोपि तीर्थंकराः ॥
सत्सम्यक्त्वविबोधवीर्यविशदा व्याबाधताद्यैर्गुणैः ।
युक्तांस्तानिह तोष्टवीमि सततं सिद्धान्विशुद्धोदयान् ॥
विराग सनातन शांत निरंश। निरामय निर्भय निर्मल हंस।
सुधाम विबोधनिधान विमोह। प्रसीद विशुद्धसुसिद्धसमूह।
विदूरितसंसृतिभावनिरंग। शमामृतपूरित देव विसंग।
अबंध कषायविहीन विमोह। प्रसीद विशुद्धसुसिद्धसमूह॥
निवारितदुष्करकर्मविपाश। सदामलकेवलकेलिनिवास।
भवोदधिपारग शांतविमोह। प्रसीद विशुद्धसुसिद्धसमूह॥
अनंतसुखामृतसागरधीर। कलंकरजोभरभूरिसमीर।
विखंडितकाम विराम विमोह। प्रसीद विशुद्धसुसिद्धसमूह।
विकारविवर्जित तर्जितशोक। विबोधसुनेत्रविलोकितलोक
विहार विराव विरंग विमोह। प्रसीद विशुद्धसुसिद्धसमूह।
रजोमलखेदविमुक्त विगात्र। निरंतरनित्यसुखामृतपात्र।
सुदर्शनराजित नाथविमोह। प्रसीद विशुद्धसुसिद्धसमूह।
नरामरवंदित निर्मलभाव। अनंतमुनिश्वरपूज्य विहाव।
सदोदयविश्वमहेश विमोह। प्रसीद विशुद्धसुसिद्धसमूह॥
विदंभ वितृष्ण विदोष विनिद्र। परापरशंकर सार वितंद्र।

विकोप विरूप विशंक विमोह । प्रसीद विशुद्धसुसिद्धसमूह ॥
जरामरणोर्जित वीतविहार । विचिंत्य विनिर्मल निर्ममकार।
अचिंत्यचरित्र विदर्प विमोह । प्रसीद विशुद्धसुसिद्धसमूह ॥
विवर्ण विगंध विमान विलोभ । विमाय विकाय विशब्द विशोभ ।
अनाकुलकेवल सर्वविमोह । प्रसीद विशुद्धसुसिद्धसमूह ॥

घत्ता

असमसमयसारं चारुचैतन्यचिन्हं
परपरिणतिमुक्तं पद्मनंदीन्द्रवंद्यं ॥
निखिलगुणनिकेतं सिद्धचक्रं विशुद्धं ।
स्मरति नमति यो वा स्तौति सौऽभ्येति मुक्ति १२

ॐ ह्रीं अनाहतपराक्रमाय सिद्धचक्राधिपतये जयमाला अर्घं निर्वपामि स्वाहा ॥

आकृष्टिं सुरसंपदां विदधते मुक्तिश्रियो वश्यता -।
मुच्चाटं विपदां चतुर्गतिभुवां विद्वेषमात्मैनसां ॥
स्तंभं दुर्गमनं प्रति प्रयततो मोहस्य संमोहनं ।
पायात्पंचनमस्क्रियाक्षरमयी साराधना देवता ॥ १३ ॥

॥ इत्याशीर्वादः ॥

अथ कलिकुंडपूजा

सिद्धं विशुद्धं महिमानवेशं । दुष्टारिमारिग्रहदोषनाशं ॥

सर्वेषु योगेषु परं प्रधानं । संस्थापये श्रीकलिकुंडयंत्रं ॥

ॐ ह्रीं श्रीं ऐं अर्हं कलिकुंडपार्श्वनाथाय अत्र अवतरावतर संवौषट् । अ
तिष्ठ तिष्ठ ठ ठ स्थापनं । अत्र मम सन्निहितो भव भव वषट् स्वा
सन्निधापनं ।

गंगापगातीर्थसुनीरपूरैः । शीतैः सुगंधैर्घनसारमिश्रैः ॥
दुष्टोपसर्गैकविनाशहेतोः । समर्चये श्रीकलिकुंडयंत्रं ॥ १

ॐ ह्रीं अर्हं श्रीकलिकुंडपार्श्वनाथाय जलं निर्वपामि स्वाहा ॥

श्रीचंदनैर्गंधविलुब्धभृंगैः । सर्वोत्तमैर्गंधविलासयुक्तैः ।
दुष्टोपसर्गैकविनाशहेतोः । समर्चये श्रीकलिकुंडयंत्रं ॥ २ ।

ॐ ह्रीं अर्हं श्रीकलिकुंडपार्श्वनाथाय गंधं निर्वपामि स्वाहा ॥

चंद्रावदातैः सरलैः सुगंधैः । अनिंद्यपात्रैर्वरशालिपुंजैः ।
दुष्टोपसर्गैकविनाशहेतोः । समर्चये श्रीकलिकुंडयंत्रं ॥ ३ ।

ॐ ह्रीं अर्हं श्रीकलिकुंडपार्श्वनाथाय अक्षतान् निर्वपामि स्वाहा ॥

मंदारजातीबकुलादिकुंदैः । सौरभ्यरम्यैः शतपत्रपुष्पैः ।
दुष्टोपसर्गैकविनाशहेतोः । समर्चये श्रीकलिकुंडयंत्रं ॥ ४ ।

ॐ ह्रीं अर्हं श्रीकलिकुंडपार्श्वनाथाय पुष्पं निर्वपामि स्वाहा ॥

बाष्पायमाणैर्घृतपूरपूरैः । नानाविधैः पात्रगतै रसाढ्यैः ।
दुष्टोपसर्गैकविशाशहेतोः । समर्चये श्रीकलिकुंडयंत्रं ॥५

ॐ ह्रीं अर्हं श्रीकलिकुंडपार्श्वनाथाय नैवेद्यं निर्वपामि स्वाहा ॥

विश्वप्रकाशैः कनकावदातैः । दीपैश्च कर्पूरमयैर्विशालैः ।
दुष्टोपसर्गैकविनाशहेतोः । समर्चये श्रीकलिकुंडयंत्रं ॥६

ॐ ह्रीं अर्हं श्रीकलिकुंडपार्श्वनाथाय दीपं निर्वपामि स्वाहा ॥

कर्पूरकृष्णागुरुचंदनाद्यैः । धूपैः सुगंधैर्वरद्रव्ययुक्तैः ।

ष्टोपसर्गैकविनाशहेतोः । समर्चये श्रीकलिकुंडयंत्रं ॥७॥
ॐ ह्रीं अर्हं श्रीकलिकुंडपार्श्वनाथाय धूपं निर्वपामि स्वाहा ॥

खर्जूरराजादननालिकेरैः । रम्यैः फलैर्मोक्षफलाभिलाषैः ।
दुष्टोपसर्गैकविनाशहेतोः । समर्चये श्रीकलिकुंडयंत्रं ॥८॥
ॐ ह्रीं अर्हं श्रीकलिकुंडपार्श्वनाथाय फल निर्वपामि स्वाहा ॥

जलगन्धाक्षतपुष्पै-र्नैवेद्यैर्दीपधूपफलनिकरैः ।
श्रीकलिकुंडाय वरं ददामि कुसुमाञ्जलिं विमलाम् ॥९॥
ॐ ह्रीं अर्हं श्रीकलिकुंडपार्श्वनाथाय अर्घं निर्वपामि स्वाहा ॥

ततो जिनेंद्रपादांते वारिधारां निपातये ।
भृंगारनालिकोद्भ्रांतां जिनमल्लोकशांतये ॥ ९ ॥
शांतये शांतिधारा ॥

अलंध्यमुत्तमाधिपं दयालुसूरिवृंदकैः ।
प्रफुल्लफुल्लमल्लिकैर्यजामि मुक्तिसिद्धये ॥१०॥
दिव्यपुष्पांजलिं क्षिपेत् ॥

श्रीमद्देवेन्द्रवृंदामलमणिमुकुटज्योतिषां चक्रवालैः ॥
र्व्यालीढं पादपीठं शठकमठकृतोपद्रवाबाधितश्च ॥
लोकालोकावभासिस्फुरदुरुविमलज्ञानसिद्धिप्रदीप- ॥
प्रध्वस्तध्वांतजालश्च वितरतु सुखं पार्श्वनाथस्य नित्यं ॥
इति स्तोत्रार्घं ॥

जाप्य ९ वा १०८

ॐ ह्रीं अर्हं श्रीं क्लीं ऐं अर्हं श्रीकलिकुंडपार्श्वनाथाय
आत्मविद्यां परात्ममायात्मविद्यां रक्ष रक्ष परविद्यां छिंद
छिंद भिंद भिंद स्क्षां स्क्षीं स्क्षूं स्क्षौं स्क्षः हूं फट् स्वाहा.

## जयमाला

प्रोद्यत्सन्मणिनागनायकफटाटोपोल्लसन्मंडपं ।
सद्भक्त्या नमदिद्रमौलिमणिभाभास्वत्पदांभोरुहं ।
प्रोन्मीलन्नवनीरदालिपटलीशंकासमुत्पादकं ।
ध्याये श्रीकलिकुंडदंडविलसच्चंडोग्रपार्श्वप्रभुं ॥१॥

सुसिद्ध विशुद्ध विबोध निधान । विकाशितविश्व विवेक निधान ।
विडंबितकामजगज्जयचंड । सदा सदयोदय जय कलिकुंड ।
पयोधिपयोधरधीरनिनाद । निराकृतदुर्मतदुर्मदवाद ॥
असत्यपथैकपतत्पविदंड । सदा सदयोदय जय कलिकुंड ॥
निराकुल निर्मलशील निरीह । निराश निरंजन जिनवर-सिंह ॥
विपाटितदुष्टमदद्विपगंड । सदा सदयोदय जय कलिकुंड ॥
कषायचतुष्टयकाष्ठकुठार । निरामय नित्य नरामरसार ॥
विदीर्णघनाघनविघ्नकरंड । सदा सदयोदय जय कलिकुंड ॥
अनल्प वितल्प विलीनविकल्प । विशल्य विशुल्य ( ? )- विसर्प विदर्प ॥
विरोग विभोग विखंड विमुंड । सदा सदयोदय जय कलिकुंड ।
फणीश नरेश सुरेश महेश । दिनेश मुनीश शुभेश गणेश ॥
चिदर्कविकाशितशतदलतुंड । सदा सदयोदय जय कलिकुंड ।
विशोक विशंक विमुक्तकलंक । विकासितविश्व विदूरि-तपंक ॥

कलाकुल केवलचिन्मयपिंड । सदा सदयोदय जय कलिकुंड ।
विखंडितमोहमहीरुहकंद । वरप्रद सत्पदसंपदमंद ॥
त्रिदंड विखंडितमाय विखंड । सदा सदयोदय जय कलिकुंड ।

घत्ता

कलिलदमनदक्षं योगियोगोपलक्षं ।
अविकलकलिकुंडोद्दंडपार्श्वप्रचंडं ॥
शिवसुखशुभसंपद्वासवल्लीवसंतं ।
प्रतिदिनमहमीडे वर्द्धमानर्ध्दिसिध्यै ॥ १० ॥

ॐ ह्री अर्हं श्रीकलिकुंडपार्श्वनाथाय जयमालार्घं निर्वपामि स्वाहा ॥

दशावतारो भुवनैकमल्लो । देवांगनाशोभितपादपद्मः ॥
श्रीपार्श्वनाथः पुरुषोत्तमोयं । ददातु वः सर्वं समीहितानि ॥

॥ इत्याशीर्वाद ॥

रत्नत्रयार्घं

अर्घेणाऽर्घाबुदूर्वादिद्रव्यसर्वस्वहारिणा ।
द्विधा सद्दर्शनज्ञानचारित्राण्यर्चयाम्यहं ॥ १ ॥

ॐ ह्री व्यवहारनिश्चयरत्नत्रयाय अर्घं निर्वपामि स्वाहा ॥

## अथ श्रुतपूजा

सतीं श्रुतस्कंधवने विहारिणी- ।
मनेकधासागहने सरस्वतीं ॥

गुरुप्रवाहेण जडानुकंपिना ।
स्तुवेऽभिवंदे वनदेवतामिव ॥ १ ॥

ॐ प्रथमानुयोगकरणानुयोगचरणानुयोगद्रव्यानुयोगश्रुतस्कंधपुस्तकोपरि पुष्पांजलिं क्षिपेत् ॥

स्याद्वादकल्पतरुमूलविराजमानां ।
रत्नत्रयांबुजसरोवरराजहंसीं ॥
अंगप्रकीर्णकचतुर्दशपूर्वकाया— ।
माहंत्यसद्गुणमयीं गिरमाह्वयामि ॥ २ ॥

ॐ ह्रीं अर्हन्मुखोत्पन्नद्वादशांगश्रुतेभ्यो अत्र अवतरावतर संवौषट् । अत्र तिष्ठ तिष्ठ ठ ठ स्थापनं । अत्र मम सन्निहितो भव भव वषट् स्वाहा ।

श्रीहेमकुंभपरिपूरितदिव्यतोयैः ।
संपूजयामि वरभव्यसुखाय वाणीं ॥
सरस्वती दिव्यमुखाब्जजाता ।
श्रीभारती भगवती जगदेकमाता ॥ ३ ॥

ॐ ह्रीं अर्हन्मुखोत्पन्नद्वादशांगश्रुतेभ्यो जलं निर्वपामि स्वाहा ॥

श्रीखंडसारघनसारसुकुंकुमाद्यैः ।
संपूजयामि वरभव्यसुखाय वाणीं ॥
सरस्वती दिव्यमुखाब्जजाता ।
श्रीभारती भगवती जगदेकमाता ॥ ४ ॥

ॐ ह्रीं अर्हन्मुखोत्पन्नद्वादशांगश्रुतेभ्यो गंधं निर्वपामि स्वाहा ॥

सौगंधगंधकलमाक्षतपुण्यपुंजैः ।
संपूजयामि वरभव्यसुखाय वाणीं ॥

सरस्वती दिव्यमुखाब्जजाता ।
श्रीभारती भगवती जगदेकमाता ॥ ५ ॥
ॐ ह्रीं अर्हन्मुखोत्पन्नद्वादशांगश्रुतेभ्यो अक्षतान् निर्वपामि स्वाहा ।

वासंतिकाबकुलमालतिमल्लिकाद्यैः ।
संपूजयामि वरभव्यसुखाय वाणीं ॥
सरस्वती दिव्यमुखाब्जजाता ।
श्रीभारती भगवती जगदेकमाता ॥ ६ ॥
ॐ ह्रीं अर्हन्मुखोत्पन्नद्वादशांगश्रुतेभ्यो पुष्प निर्वपामि स्वाहा ॥

संसिद्धशुद्धपरमान्नसिताज्यभक्ष्यैः ।
संपूजयामि वरभव्यसुखाय वाणीं ।
सरस्वती दिव्यमुखाब्जजाता ।
श्रीभारती भगवती जगदेकमाता ॥ ७ ॥
ॐ ह्रीं अर्हन्मुखोत्पन्नद्वादशांगश्रुतेभ्यो नैवेद्य निर्वपामि स्वाहा ॥

प्रालेयकादिवरनिर्मलरत्नदीपैः ।
संपूजयामि वरभव्यसुखाय वाणीं ॥
सरस्वती दिव्यमुखाब्जजाता ।
श्रीभारती भगवती जगदेकमाता ॥ ८ ॥
ॐ ह्रीं अर्हन्मुखोत्पन्नद्वादशांगश्रुतेभ्यो दीप निर्वपामि स्वाहा ॥

कालागरुप्रसभसौरभ धूपधूम्रैः ।
संपूजयामि वरभव्यसुखाय वाणीं ॥
सरस्वती दिव्यमुखाब्जजाता ।
श्रीभारती भगवती जगदेकमाता ॥ ९ ॥
ॐ ह्रीं अर्हन्मुखोत्पन्नद्वादशांगश्रुतेभ्यो धूपं निर्वपामि स्वाहा ॥

नारिंगनिंबुकदलीपनसाम्रपक्वैः ।
संपूजयामि वरभव्यसुखाय वाणी ॥
सरस्वती दिव्यमुखाब्जजाता ।
श्रीभारती भगवती जगदेकमाता ॥ १० ।

ॐ ह्रीं अर्हन्मुखोत्पन्नद्वादशांगश्रुतेभ्यो फलं निर्वपामि स्वाहा ॥

क्षीरोदचिन्हदिविजागविशेषवस्त्रैः ।
संपूजयामि वरभव्यसुखाय वाणीं ॥
सरस्वती दिव्यमुखाब्जजाता ।
श्रीभारती भगवती जगदेकमाता ॥ ११ ॥

ॐ ह्रीं अर्हन्मुखोत्पन्नद्वादशांगश्रुतेभ्यो वस्त्राभरण करोमि स्वाहा ॥

केयूरहारमणिकुंडलशेखराद्यैः ।
संपूजयामि वरभव्यसुखाय वाणीं ॥
सरस्वती दिव्यमुखाब्जजाता ।
श्रीभारती भगवती जगदेकमाता ॥ १२ ॥

ॐ ह्रीं अर्हन्मुखोत्पन्नद्वादशांगश्रुतेभ्यो षोडशाभरणं करोमि स्वाहा ॥

श्रीमज्जिनेन्द्रमुखपद्मविराजमानां ।
संपूजयामि वरभव्यसुखाय वाणीं ॥
सरस्वती दिव्यमुखाब्जजाता ।
श्रीभारती भगवती जगदेकमाता ॥ १३ ॥

ॐ ह्रीं अर्हन्मुखोत्पन्नद्वादशांगश्रुतेभ्यो अर्घं निर्वपामि स्वाहा ॥

इत्यमीभिः समाराध्य पूजाद्रव्यैः श्रुतं वरं ।
भवसंतापविच्छेदशांतिधारां करोम्यहं ॥

शांतये शांतिधारां ॥

समस्तशास्त्रदेशकं चरित्रपात्रदेशकं ।
विकाशकेतकीदलैर्यजामि मुक्तिसिद्धये ।।

पुष्पांजलिं क्षिपेत् ।।

द्वादशांगस्वागबाह्यशास्त्रवार्धिपारगान् ।
साधुवादवज्रभिन्नमत्तवादिभूधरान् ।।
साद्यनाद्यनंतशांतमोक्षमार्गदेशकान् ।
आदरेण नम्रमीमि पाठकान् गुणांबुधीन् ।।

इति स्तोत्रार्घं ।।

जाप्य ९ वा १०८

ॐ ह्रीं श्री क्लीं वाग्वादिनि वद वद नमः स्वाहा ।।

जयमाला

श्रीजिनवरवाणी अमियसुहामणी गंभीर मधुर सुहामणीए ।
समदुःखनरहिता बहुगुणसहिता मनोहरा रलियामणीए ।
सुकंठ विओष्ट विरहित सुचंग । सुअंगविपूर्वकसहित अभंग ।
सुसुमति पूर्वक श्रुतज्ञान विशाल, ते पूजो जिनवाणी गुणमाल ।
सुएक अनेक प्रदेश सुखाणी । सुदूरिय आसन समय सुजाणी ।
सुशीतलपण शशिकल सुविशाल, ते पूजो जिनवाणी गुणमाल ।
सुतत्त्वप्रकाशन दीपह तेज । सु पढतां भवियन उपजह तेज ।
सुमिथ्यात्वतिमिर फेडन सुविशाल । ते पूजो जिनवाणी० ।
सुपरमब्रह्म मुखकमल अभंग । सुबारह अंगसुसहित सुचंग ।
सु सरस्वति वाग्वादिनि सुविशाल । ते पूजो जिनवाणी० ।

सुपहिलो आचारांग सुजाण । सुबीजो सुत्र कृत शुभ खाल ।
सुत्रीजो स्थानक अंग विशाल । ते पूजो जिनवाणी गुणमाल ।
सुचवथो समवयांग सुचंग,सुपाचमो व्याख्याप्रज्ञप्ति अभंग ।
सुछटो ज्ञातृकथा सुविशाल । ते पूजो जिनवाणी गुणमाल ।
सु सातमो उपासका गुणवंता । सु आठमो अंतकृत जयवंत ।
सु नवमो अनुत्तर अंग विशाल । ते पूजो जिनवाणी गुणमाल ।
सुदशमो प्रश्न व्याकरण सुचंग । सुग्यारमो विपाकसूत्र उत्तुंग ।
सु बारमो दृष्टिवादन सुविशाल । ते पूजो जिनवाणी० ।
सुजिनवर मुखकमळायोत्पन्न । सुद्वादश अंग श्रुत निष्पन्न ।
सुगणधर गुंथित ज्ञानविशाल । ते पूजो जिनवाणी गुणमाल ।
सुमुनि विस्तरित गुणवंत,सुत्रिभुवनमाहि ज्योति जयवंत ।
सु भारति शारद गुणह विशाल । ते पूजो जिनवाणी० ।
सुभवियन वन्दित त्रिभुवन तार । सु जिनशासन साहे सिनगार ।
सुरेंद्र नरेंद्र सेवित सु विशाल । ते पूजो जिनवाणी गुणमाल ।

घत्ता

अज्ञानतिमिरहर सुज्ञान दिवाकर । पढे गुणे जे ज्ञानधणी ।
ब्रह्म जिनदास भासे विविधप्रकाशे । मन वांछित फल वुद्ध घणी ॥ १३ ॥

ॐ ह्रीं अर्हन्मुखोत्पन्नद्वादशांगश्रुतेभ्यो जयमालार्घं निर्वपामि स्वाहा ॥

या कर्पूरतुषारहारहसना या चंद्रबिंबानना ।
या त्रैलोक्यविभूषणं भगवती या राजहंस प्रिया ।
या पद्मोदरपद्मनेत्रयुगला या जातिपुष्पप्रिया ।
या नक्षत्रललाटपट्टतिलका सा शारदा पातु वः ॥ १ ॥

॥ इत्याशीर्वाद ॥

# गुरुपूजा

समनःपर्ययज्ञानश्रुतसागरपारगान् ।
आचार्यवर्यस्वामीनां पंचाचारपरायणान् ॥ १ ॥

ॐ ह्री गणधरपरमेष्ठिभ्यो अत्र अवतरावतर सवौषट् । अत्र तिष्ठ तिष्ठ ठ ठ स्थापन । अत्र मम सन्निहितो भव भव वषट् स्वाहा ॥

हेमभृङ्गारनिर्वान्तहारया वारि धारया ।
पूजयामि गुरून्भक्त्या गौतमान् गणनायकान् ॥ २ ॥

ॐ ह्री गणधरपरमेष्ठिभ्यो जलं निर्वपामि स्वाहा ॥

श्रीखण्डागरुकर्पूरमिश्रया गन्धचर्चया ।
पूजयामि गुरून्भक्त्या गौतमान् गणनायकान् ॥३॥

ॐ ह्री गणधरपरमेष्ठिभ्यो गध निर्वपामि स्वाहा ॥

अक्षतैरक्षयानन्तसंपत्संपादनक्षमैः ।
पूजयामि गुरून्भक्त्या गौतमान् गणनायकान् ॥ ४ ॥

ॐ ह्री गणधरपरमेष्ठिभ्योऽक्षतान् निर्वपामि स्वाहा ॥

पुष्पैश्चम्पकपुन्नागमल्लिकाबकुलादिभिः ।
पूजयामि गुरून्भक्त्या गौतमान् गणनायकान् ॥ ५ ॥

ॐ ह्री गणधरपरमेष्ठिभ्यो पुष्पं निर्वपामि स्वाहा ।

नैवेद्येनानवद्येन सुधारससमत्विषा ।
पूजयामि गुरून्भक्त्या गौतमान् गणनायकान् ॥ ६ ॥
ॐ ह्री गणधरपरमेष्ठिभ्यो नैवेद्य निर्वपामि स्वाहा ॥

दीपैः कर्पूरनिर्वान्तैर्वर्तिकाग्रविनिर्गतैः ।
पूजयामि गुरून्भक्त्या गौतमान् गणनायकान् ॥ ७ ॥
ॐ ह्री गणधरपरमेष्ठिभ्यो दीपं निर्वपामि स्वाहा ॥

सौरभ्याकृष्टमधुपैर्धूपैरगुरुसंभवैः ।
पूजयामि गुरून्भक्त्या गौतमान् गणनायकान् ॥ ८ ।
ॐ ह्री गणधरपरमेष्ठिभ्यो धूप निर्वपामि स्वाहा ॥

फलैर्नारिंगजम्बीरजम्ब्वाद्यैर्हृद्यतागतै. ।
पूजयामि गुरून्भक्त्या गौतमान् गणनायकान् ॥ ९ ॥
ॐ ह्री गणधरपरमेष्ठिभ्य फल निर्वपामि स्वाहा ॥

सुवर्णादिसुपात्रस्थैरर्घद्रव्यसमूहकैः ।
पूजयामि गुरून्भक्त्या गौतमान् गणनायकान् ॥ १० ॥
ॐ ह्री गणधरपरमेष्ठिभ्योऽर्घं निर्वपामि स्वाहा ॥

तदनु सकलभव्यप्राणिकर्मोपशान्त्यै ।
शुचिमुपरचयामो वारिभिः शांतिधाराम् ।
॥ शान्तये शान्तिधारा ॥

चिदर्थभावनापरं सुसाधुसाधुवृंदकं ।
सुवर्णवर्णचंपकैर्यजामि मुक्तिसिद्धये ॥

[illegible]

मोक्षहेतुभूतकर्मशत्रुयोगनश्वरं ।
दक्षचक्षुरादि [illegible] ॥

अक्षयोरुलक्षमेयसत्कटाक्षमोक्षणं ।
मोक्षमुख्यसाधुसंगमायजामि सिद्धये ।।

इति स्तोत्रार्घं ।।

जाप्य ९ वा १०८

ॐ ह्रीं आचार्यपरमेष्ठिभ्यो नमः ।।

जयमाला

सकल मुनीश्वर नमितसुरासुर । अनुदिन चरणकमल नमूं ।
तुम-परसादे मन आल्हादे । स्तवतकरी भवदुःख गमूं ।
एक आतमध्यानसहीत नमो । दोय रागद्वेषपरिहरित नमो ।
तिन रयणमंडित वरकाय नमो । चउकषायरहितयतिपाय नमो ।
पंचाचारविचार नमो । पंचाश्रव आश्रव रहित नमो ।
पचेंद्रियशोषितगात्र नमो । पंचमगतिसाधित तात नमो ।
षट्कायदयाकर वीर नमो । षट्द्रव्यप्रकाशनधीर नमो ।
षट् षट् मनचिन्तित देव नमो । षट्कालवखानितसेव नमो ।
भयसातरहित गुणवंत नमो । गुणस्थान सात जयवंत नमो ।
अष्टध्यानसहित मुनिकाय नमो । अष्टमदरहित यतिकाय नमो ।
नय नय कलित गंभीर नमो । नवविध शिलपालित वीर नमो ।
दशलक्षणधर्मप्रकाश नमो । दहधर्मध्यान आवास नमो ।

दह् एक पडिम उपदेश नमो । दह् दुविध तपश्रिय ईस नमो।
दह् तीन चरण पालीत नमो । दह् चारमल टालीत नमो।
दह्पंचप्रमाद बिरहीत नमो । दह् षट् परिभावन भाषीत नमो ।
दह् सात संयमगुणधरण नमो । दह् आठ दोष दुरिकरण नमो ।
दह् आठ सहस्त्रशिल चरण नमो । दह्नवसमास जिवकह्न नमो ।
दह् दह् वर मार्गण कथित नमो । दह् दह् एक चतुर्गण लक्ष नमो ॥ ९ ॥
दह् दह् दुपरिसह सहन नमो । दह् दह् तीन स्थानक कलित नमो ।
दह् दह् चतुर्जिनवर पाय नमो । दह् दह् पन भावन भावीत नमो ॥ १० ॥
एह् गुण आदि गुणवंत नमो । निर्ग्रंथमुनि जयवंत नमो ।
गणधर यतिवर गुरुपाय नमो । मनवचनसफलकर काय नमो ॥ ११ ॥
तिहुयणजनपूजितचरण नमो।तिहुयणभवियणउद्धरण नमो ।
ते तरणतारण भवतरण नमो । करुणारस शमगुणकरण्ड नमो ॥ १२ ॥
श्रीधर्मशुक्लध्यानधरण नमो । गुणस्थान श्रेणी आरुढ नमो ।
श्रीकेवलज्ञानउद्योत नमो । श्रीमुक्तिरमणिवरकांत नमो ।

घत्ता

श्रीमुनिवरस्वामी नमूं सिरनामी ।
दोयकर जोडि विनय करी ॥
दीक्षा अति निर्मल द्यो मुझ उजलि ।
ब्रह्म जिनदास कहे कृपा करी ॥

ॐ ह्रीं गणधरपरमेष्ठिभ्यो जयमाला अर्घ निर्वपामि स्वाहा ॥

देहे निर्ममता गुरौ विनयता नित्यं श्रुताभ्यासता ।
चारित्रोज्ज्वलता महोपशमता संसारनिर्वेगता ॥
अन्तर्बाह्यपरिग्रहत्यजनता धर्मागता साधुता ।
साधोः साधुजनस्य लक्षणमिदं संसारविच्छेदकम् ॥

॥ इत्याशीर्वादः ॥

अर्हंसिद्धगुरुर्दृष्टिज्ञानचर्यासुपूजिताः ।
पूर्णार्घ्यं प्रापिताश्चैव संतु क्षेमाय शर्म्मणि ॥

ॐ ह्रां ह्रीं ह्रूं ह्रौं ह्रः अ सि आ उ सा अर्हंत्सिद्धाचार्योपाध्याय-सर्वसाधुपंचपरमेष्ठिभ्यो नमः पूर्णार्घं निर्वपामीति स्वाहा ॥

# अथ सप्तर्षि पूजा

( अथ पूर्ववद्वायुकुमारादिप्रयोगेण भूमिसंस्कारः )

श्रीमन्नेमिं जगत्पूज्यं । जगदानंददायकं ॥
यजामि सुव्रतं देवं । धर्मभूषं गुणास्पदं ॥१॥
नत्वा जिनं प्रवक्ष्यामि सप्तर्द्धिमुनिपूजनं ॥
विघ्नौघखंडनं यस्माज्जायते भव्यदेहिनां ॥२॥
शांतिः सिद्धिर्महाकीर्तिस्तुष्टिः पुष्टिः प्रमोदिता ।
यत्रार्चा स्यान्मुनेः पादद्वंद्वस्य कमलानने ॥३॥
पूर्वं गंधकुटीपूजा कार्या सुकमलादिना ॥
वाग्मिना धौतचैलादियुजा नृजन्मशालिना ॥४॥
मण्डलं कारयेद्भव्यं पंचवर्णसमुद्भवं ॥
सप्तकोष्ठमयं भव्यं भव्यजीवप्रसादनं ॥५॥
योगींद्रयुगलं पूर्वं चर्चनीयं मनोहरं ॥
सव्येत्तरप्रदेशस्थं भव्यविघ्नविहानये ॥६॥
आदि युगादि भव्येन वीशेनकृत सुंदरात् ॥ (?)
उध्रता परमान्येयं (?) सर्वविघ्नविनाशकः

एतत्पठित्वा कर्णिकोपरि पुष्पांजलिं क्षिपेत् ॥

# अथ दक्षिण योगींद्र पूजा

श्रीमत्सुयोगींद्रकमंगलांगं । जगज्जनेत्राण (?) सुवर्णभूतं ।
अत्रोक्षतं शांतिकरं गुणाढ्यं । संस्थापयेऽहं मुनिपुङ्गवन्तं ॥

ॐ ह्री श्री ह्ः सव्यस्थ श्रीयोगीद्राय अत्र अवतरावतर सवौषट् स्वाहा।
ॐ ह्री श्री ह्र सव्यस्थ श्रीयोगीद्राय अत्र तिष्ठ तिष्ठ ठ ठ स्वाहा। स्थापन।
ॐ ह्री श्री ह्र सव्यस्थ श्रीयोगीद्राय अत्र मम सन्निहितो भव भव वषट् स्वाहा सन्निधापन।

**रम्यैः कुशैः संस्कृतचंदनौघैः संसारतापार्तिहरैः सुशीतैः।**
**सव्यं प्रकृष्टं मुनिपुंगवं तं यायज्मि विघ्नौघविनाशहेतुं ।।२।।**

ॐ ह्री श्री ह्र सर्वोपद्रवविनाशकाय जगच्छातिकराय सव्यस्थितयोगीद्राय जल निर्वपामि स्वाहा ।।

**सच्चंदनैश्चन्द्रकरावदातैः सत्कुंकुमामिश्रितपीतवर्णैः ।।**
**सव्यं प्रकृष्टं मुनिपुंगवं तं यायज्मि विघ्नौघविनाशहेतुं।।३।।**

ॐ ह्री श्री ह्र मर्वोपद्रवविनाशकाय जगच्छातिकराय सव्यस्थितयोगीन्द्राय गध निर्वपामि स्वाहा

**सज्जीरशाल्युद्भवतंडुलौघैरखंडपुंजैरमलैः सुगंधैः ।।**
**सव्यं प्रकृष्टं मुनिपुंगवं तं यायज्मि विघ्नौघविनाशहेतुं।।४।।**

ॐ ह्री श्रीं ह्र सर्वोपद्रवविनाशकाय जगच्छातिकराय सव्यस्थितयोगीन्द्राय अक्षतान् निर्वपामि स्वाहा ।।

**पद्मालिसन्मालतिचंपकाद्यैः सद्वाससंप्रीणितषट्पदौघैः ।।**
**सव्यं प्रकृष्टं मुनिपुंगवं तं यायज्मि विघ्नौघविनाशहेतुं ।।५।।**

ॐ ह्री श्री ह्र सर्वोपद्रवविनाशकाय जगच्छांतिकराय नव्यस्थितयोगीन्द्राय पुष्प निर्वपामि स्वाहा ।।

**पूपादिकैर्घेबरफेणकाद्यैः सद्घ्राणहृन्नेत्रसुखप्रदानैः ।।**
**सव्यं प्रकृष्टं मुनिपुंगवं तं यायज्मि विघ्नौघविनाशहेतुं ।।६।।**

ॐ ह्री श्री ह्र सर्वोपद्रवविनाशकाय जगच्छातिकराय सव्यस्थितयोगीन्द्राय नैवेद्य निर्वपामि स्वाहा ।।

सर्वौषधीशोद्भवसुंदरैस्तैः दीपैः प्रकृष्टामलबोधरूपैः ॥
सव्यं प्रकृष्टं मुनिपुंगवं तं यायज्मि विघ्नौघविनाशहेतुं ॥७॥
ॐ ह्रीं श्रीं ह्रः सर्वोपद्रवविनाशकाय जगच्छांतिकराय सव्यस्थितयोगीन्द्राय दीपं निर्वपामि स्वाहा ॥

कृष्णागरूद्भूतसुधूम्रधूपैः सद्वासकामत्तमधुव्रतौघैः ।
सव्यं प्रकृष्टं मुनिपुंगवं तं यायज्मि विघ्नौघविनाशहेतुं ॥८॥
ॐ ह्रीं श्रीं ह्रः सर्वोपद्रवविनाशकाय जगच्छांतिकराय सव्यस्थितयोगीन्द्राय धूपं निर्वपामि स्वाहा ॥

कम्राम्रसद्दाडिममातुलिंगैः श्रीपुंगनारिंगफलैर्मनोज्ञैः ॥
सव्यं प्रकृष्टं मुनिपुंगवं तं यायज्मि विघ्नौघविनाशहेतुं ।९।
ॐ ह्रीं श्रीं ह्रः सर्वोपद्रवविनाशकाय जगच्छांतिकराय सव्यस्थितयोगीन्द्राय फलं निर्वपामि स्वाहा ॥

वाश्चंदनाक्षतसुपुष्पचरुप्रदीपं ।
धूपैः फलैश्च रचितं वरमर्घपात्रं ।
योगींद्रकाय वृषभूषणचर्चिताय ।
देवेंद्रकीर्तिरपराय ददामि भक्त्या ॥

ॐ ह्रीं श्रीं ह्रः सर्वोपद्रवविनाशकाय जगच्छांतिकराय सव्यस्थितयोगीन्द्रायार्घ्यं निर्वपामि स्वाहा ॥

शांतये शांतिधारा । दिव्यपुष्पांजलिं क्षिपेत् ॥

## अथ वामयोगींद्रपूजा

श्रीजिनागमसंसिद्धयोगशास्त्रोक्तयोगगं ॥
योगींद्रमाव्हयाम्यस्मिन्नर्चयामि विधानतः ॥१॥

ॐ ह्रीं श्रीं ह्रः सर्वोपद्रवविनाशकाय जगच्छांतिकराय वामस्थितयोगीन्द्राय अत्र अवतरावतर सवौषट् स्वाहा। अत्र तिष्ठ तिष्ठ ठ ठ स्थापन। अत्र मम सन्निहितो भव भव वषट् स्वाहा सन्निधापन ॥

**सत्सौमधूल्याकलितैः सुपूतैः। विश्वासभृत्तापहरैः सुनीरैः।**
**प्रवृष्ट रात्रि स्मर काल योगं। श्रीवामयोगींद्रमतंद्रमंचे ॥२॥**

ॐ ह्रीं श्रीं ह्र सर्वोपद्रवविनाशकाय जगच्छांतिकराय वामस्थितयोगीन्द्राय जल निर्वपामि स्वाहा ॥

**सद्भोगिनामिष्टसुखप्रमादैः। श्रीखंडकाश्मीरसुयोगगंधैः।**
**प्रवृष्ट रात्रि स्मर काल योगं। श्रीवामयोगींद्रमतंद्रमंचे॥३॥**

ॐ ह्रीं श्रीं ह्र सर्वोपद्रवविनाशकाय जगच्छांतिकराय वामस्थितयोगीन्द्राय गंध निर्वपामि स्वाहा ॥

**तारानिभैरिंदुकरातिशुभ्रैः। पुंजैः सुगंधाक्षततंडुलौघैः।**
**प्रवृष्ट रात्रि स्मर काल योगं। श्रीवामयोगींद्रमतंद्रमंचे॥४॥**

ॐ ह्रीं श्रीं ह्र सर्वोपद्रवविनाशकाय जगच्छांतिकराय वामस्थितयोगीन्द्राय अक्षतान् निर्वपामि स्वाहा ।

**सन्मालतिदीवरकंजलेपसन्नीपकुंदादिलतांतवृंदैः ॥**
**प्रवृष्ट रात्रि स्मर काल योगं। श्रीवामयोगीन्द्रमतंद्रमंचे ५**

ॐ ह्रीं श्रीं ह्र सर्वोपद्रवविनाशकाय जगच्छांतिकराय वामस्थितयोगीन्द्राय पुष्प निर्वपामि स्वाहा ॥

**स्वच्छातिभक्त्याज्यसुभक्षभक्ष्यैः, क्षीरादियुक्तैःसुरसैःसुहव्यैः।**
**प्रवृष्ट रात्रि स्मर काल योगं। श्रीवामयोगीन्द्रमतंद्रमंचे ।६।**

ॐ ह्रीं श्रीं ह्र सर्वोपद्रवविनाशकाय जगच्छांतिकराय वामस्थितयोगीन्द्राय नैवेद्य निर्वपामि स्वाहा ॥

**अज्ञानदुर्ध्वांतसमूहसूरैः। कर्पूरदीपैरमलैर्मनोज्ञैः।**
**प्रवृष्ट रात्रि स्मर काल योगं, श्रीवामयोगीन्द्रमतंद्रमंचे ॥७॥**

ॐ ह्रीं श्री ह्र. सर्वोपद्रवविनाशकाय जगच्छांतिकराय वामस्थितयोगीन्द्राय दीपं निर्वपामि स्वाहा ॥

स्वामोदसंवासितधीरवारैः । धूपैः सुलोहेंदुवरादिजातैः ।
प्रवृष्ट रात्रि स्मर काल योगं, श्रीवामयोगीन्द्रमतंद्रमंचे ॥८॥

ॐ ह्रीं श्रीं ह्र. सर्वोपद्रवविनाशकाय जगच्छांतिकराय वामस्थितयोगीन्द्राय धूपं निर्वपामि स्वाहा ॥

सद्योजनीपूगसुचोचमोचसद्बीजपूरादिफलोत्करैस्तैः ।
प्रवृष्ट रात्रि स्मर काल योगं, श्रीवामयोगीन्द्रमतंद्रमंचे ॥९॥

ॐ ह्रीं श्रीं ह्र. सर्वोपद्रवविनाशकाय जगच्छांतिकराय वामस्थितयोगीन्द्राय फलं निर्वपामि स्वाहा ॥

तोयादिसद्वस्तुकृतैरनर्घ्यैं । रर्घैर्बुधानामसृतप्रदैश्च ।
प्रवृष्ट रात्रि स्मर काल योगं, श्रीवामयोगीन्द्रमतद्रमंचे ॥१०॥

ॐ ह्रीं श्रीं ह्र सर्वोपद्रवविनाशकाय जगच्छांतिकराय वामस्थितयोगीन्द्राय अर्घं निर्वपामि स्वाहा ॥

शांतये शांतिधाराम् । दिव्यपुष्पांजलिं क्षिपेत् ॥

इति वाम योगींद्र पूजा ॥

# अथ स्तुतिः पूजा

कलाढ्यं कलिढ्यं (?) गुणानां समाजं ।
मदोन्मादहं कल्पिता कामराजं ॥
परं त्यक्तराज्यं गतापंचपापं ।
स्तुवे युक्तसप्तर्द्धिसाधुस्वरूपं ।
कुदोषातिगं सर्वतत्त्वप्रकाशं ।
प्रविष्टं प्रकृष्टं प्रसादं रमेशं ॥

कलं धर्मरूपं नमत्पादभूपं ।
स्तुवे युक्तसप्तर्द्धिसाधुस्वरूपं ।। २ ।।
सुवर्षासुकाले कृतध्यानवासं ।
षडावश्यदूरीकृतानेकपाशं ।।
पवित्रं रसासौख्यमुक्तं सुलापं ।
स्तुवे युक्तसप्तर्द्धिसाधुस्वरूपं ।। ३ ।।
सदोष्णे धराध्रोपरिष्टं सुवक्रं ।
सुकायत्कृतीकारकधर्मचक्रं ।।
नमन्नाकिनाथं विहारं विशापं ।
स्तुवे युक्तसप्तर्द्धिसाधुस्वरूपं ।। ४ ।।
चतुर्मार्गगावाहिनीतीरयोगं ।
सहेमन्तदिग्वास संस्कृत्य भोगं ।।
जगल्लब्धकीर्ति सुबोधप्रदीपं ।
स्तुवे युक्तसप्तर्द्धिसाधुस्वरूपं ।। ५ ।।
गभीराब्धिकं धीरस्वर्णाचलेशं ।
भवारण्यसत्पावकं शुक्ललेश्यं ।।
कवींद्रास्तुतास्नानभूषातिगोपं ।
स्तुवे युक्तसप्तर्द्धिसाधुस्वरूपं ।। ६ ।।
लसल्लब्धिभावं भवोत्तारनाम ।
सदद्भिकृताहारकं विश्वभावं ।।
जनानन्दरावं भवंतं भवायं ।
स्तुवे युक्तसप्तर्द्धिसाधुस्वरूपं ।। ७ ।।

सुलालं विशोकं विमायं विमोहं ।
विरागं मनोज्ञं मतिसंविखेदं ॥
नतेशानशक्रं वरं धर्मयूपं ।
स्तुवे युक्तसप्तर्द्धिसाधुस्वरूपं ॥ ८ ॥
इतिगिरि सममुनि स्तुतिय पठंति पुण्यमतयेः ॥
धर्मभूषण वचो गुणनंदि देवेंद्रसत्कीर्तितांवसं (?) ॥ ९ ॥

## अथ समुदायपूजा

चिद्रूपं विश्वरूपं व्यतिकरितमनाद्यंतमानंदसांद्रं ॥
यत्प्रोक्तैस्तैर्विवर्तैर्विवृततदधिपैर्दुःखसौख्याभिमानैः ॥
कर्मोद्रेकात्तदात्मप्रतिदिनमभिदोद्भिन्ननिःसीमतेजः ॥
प्रत्यासीदत्परौजः स्फुरदिह परमब्रह्म यज्ञेहमाव्हम् ॥ १ ॥
ॐ ह्रीं श्री ह्रः सर्वोपद्रवविनाशनसमर्थं सप्तर्षीणामुपरि पुष्पांजलि ॥
स्वामिन् संवौषट् कृतावाहनस्य ।
दिष्टांते नोट्टंकितस्थापनस्य ॥
स्वर्गावाप्त्यै तुं वषट्कार जाग्रत् ।
सांनिध्यस्य प्रारभे ह्यष्टसिद्धयै ॥
ॐ ह्रीं श्री ह्रः सप्तर्द्धियुक्तसप्तमुनये सर्वोपद्रवविनाशहेतवे चौरादिडाकिनी-शाकिनीव्यंतरभूतादिपराभवनिवारकाय अत्र अवतरावतर संवौषट् । अत्र तिष्ठ तिष्ठ ठ ठ स्थापन । अत्र मम सन्निहितो भव भव वषट् स्वाहा सन्निधापनं ॥

अथाष्टकम्

जंतुजीवनप्रमोदवाग्वरिष्ठकृत्सुखं ।
मीनकेतुमानमर्द्दनात्तसंमूकरहृकम् (?)॥

चन्द्रमिश्रितांबुहेमभृंगनालधारया ।
सप्तकार्द्धियुक्तसप्तयोगिनं यजे तया ॥ १ ॥

ॐ ह्री सप्तर्द्धियुक्तसप्तमुनये सर्वोपद्रवविनाशहेतवे चौरादिडाकिनीशाकिनी-व्यंतरभूतादिपराभवनिवारकाय जल निर्वपामि स्वाहा ॥

कृत्स्नतत्त्व तृप्तगात्र वस्त्रशस्त्रका स्पृशम् ।
चित्स्वरूप चिंतनं सुब्रह्म सद्मसंस्पृशम् ॥
भावभस्मसात्सदंगिनैः सुसातहेतुना ।
चंदनेन योग सप्तकम् यजामि साधुना ॥ २ ॥

ॐ ह्री सप्तर्द्धियुक्तसप्तमुनये सर्वोपद्रवविनाशहेतवे चौरादिडाकिनीशाकिनी-व्यतरभूतादिपराभवनिवारकाय गध निर्वपामि स्वाहा ॥

अक्षतास्पदं स्पृहं कृखादि सातनिस्पृहं ।
चणुचंद्र चर्चितान्हि कंजकिल्विषापहं ॥
पष्टि कादि संभवेन तंदुलेन शालिनां ।
सप्तकर्द्धि योगिनं यजामहे सुखंडिनां ॥ ३ ॥

ॐ ह्री सप्तर्द्धियुक्तसप्तमुनये सर्वोपद्रवविनाशहेतवे चौरादिडाकिनीशाकिनी-व्यतरभूतादिपराभवनिवारकाय अक्षतान् निर्वपामि स्वाहा ॥

नम्रशर्म यक्षनाक नायका सुरैवरम् ।
धर्मधर्म कल्पनोरुकिल्विषं मनोहरम् ॥
बंधुरुह बंधूराव्हे षट्पद प्रमोदिना ।
संयजामि सप्तकं यजामहे मुदाधुना ॥ ४ ॥

ॐ ह्री सप्तर्द्धियुक्तसप्तमुनये सर्वोपद्रवविनाशहेतवे चौरादिडाकिनीशाकिनी-व्यतरभूतादिपराभवनिवारकाय पुष्प निर्वपामि स्वाहा ॥

अक्षसौख्य कर्कशं कलंक मुक्तमानसं ।
मुक्तिभीरु लोलुपं सुबोध तृप्त मानसं ॥

घ्राणहृत्सुनेत्रकोत्सवादि दायिनं मुदा ।
चारुणायजेनकेनत्वं सुयोगिनं सदा ॥ ५ ॥

ॐ ह्रीं सप्तर्द्धिकसप्तमुनये सर्वोपद्रवविनाशहेतवे चौरादिडाकिनीशाकिनी-व्यंतरभूतादिपराभवनिवारकाय नैवेद्यं निर्वपामि स्वाहा ॥

दिव्यदेवदंभ दंतिदारणं दशान्वितं ।
दूरदर्शिनं दयोदधि विदारकैर्यतं ॥
केवलावबोधभासिरत्नजैर्विधूद्भवैः ।
साधुसप्तकं यजामहे प्रदीपकैर्नवैः ॥ ६ ॥

ॐ ह्रीं सप्तर्द्धिकसप्तमुनये सर्वोपद्रवविनाशहेतवे चौरादिडाकिनीशाकिनी-व्यंतरभूतादिपराभवनिवारकाय दीपं निर्वपामि स्वाहा ॥

चारुचंदनागरूद्भवैः सुधूपकैर्वरैः ।
व्याप्तदिग्मुखैः सुगंधमोहितामरोत्करैः ।
दुष्टकर्मकाष्ठदाहनं समुद्धतप्रभं ।
सूरिसप्तकं यजामहे गुणास्पदं शुभं ॥ ७ ॥

ॐ ह्रीं सप्तर्द्धिकसप्तमुनये सर्वोपद्रवविनाशहेतवे चौरादिडाकिनीशाकिनी-व्यंतरभूतादिपराभवनिवारकाय धूपं निर्वपामि स्वाहा ॥

श्रीफलाम्रकम्रमृद्विकासुमातुलिंगकैः ।
घ्राणनेत्रतृप्तिदैर्वरैः सुनागरंगकैः ॥
सिद्धशुद्धिदिव्यसौख्यसत्फलप्रदायकैः ।
साधुसप्तकं यजामहे वयं प्रमोदकं ॥ ८ ॥

ॐ ह्रीं सप्तर्द्धिकसप्तमुनये सर्वोपद्रवविनाशहेतवे चौरादिडाकिनीशाकिनी-व्यंतरभूतादिपराभवनिवारकाय फलं निर्वपामि स्वाहा ॥

वार्गंधतंदुललतांतहव्यं । दीपालिधूपौघफलार्घकांश्च ।।
श्रीधर्मभूषाय मुनींद्रकांद्र । सप्तकायमयामिश सुरेंद्रकीर्त्यैं ।।

ॐ ह्री सप्तर्द्धिकसप्तमुनये सर्वोपद्रवविनाशहेतवे चौरादिडाकिनीशाकिनी-व्यंतरभूतादिपराभवनिवारकाय अर्घं निर्वपामि स्वाहा ।।

शांतये शांतिधारा । दिव्य पुष्पाजलिं क्षिपेत् ।

# अथ प्रत्येक पूजा

विमलललितलापो लुप्तरामाविभासो ।
विगतमदनमानः छिन्नदुर्भावपाशः ।।
परमसुरसमन्युस्तत्पदं चर्चयेहं ।
रजनिकरसुमिश्रैर्नीरमुख्यैर्भयाहं ।। १ ।।

ॐ ह्री सर्वोपद्रवचौरारिमारिरोगडाकिनीशाकिनीकुशवन्हिभगदराद्युद्भवा-ल्पमृत्युविनाशनाय सुरमन्यवे सप्तर्द्धिमप्राप्ताय अत्र अवतरावतर संवौषट् स्वाहा। अत्र तिष्ठ तिष्ठ ठ ठ स्थापन । अत्र मम सन्निहितो भव भव वषट् स्वाहा । पुष्पाजलिं ।।

ॐ ह्री सुरमन्यवे सप्तर्द्धिसप्राप्ताय जलं निर्वपामि स्वाहा ।।
ॐ ह्री सुरमन्यवे सप्तर्द्धिसप्राप्ताय गंधं निर्वपामि स्वाहा ।।
ॐ ह्री सुरमन्यवे सप्तर्द्धिसप्राप्ताय अक्षतान् निर्वपामि स्वाहा ।।
ॐ ह्री सुरमन्यवे सप्तर्द्धिसप्राप्ताय पुष्पं निर्वपामि स्वाहा ।।
ॐ ह्री सुरमन्यवे सप्तर्द्धिसप्राप्ताय नैवेद्यं निर्वपामि स्वाहा ।।
ॐ ह्री सुरमन्यवे सप्तर्द्धिसप्राप्ताय दीपं निर्वपामि स्वाहा ।।
ॐ ह्री सुरमन्यवे सप्तर्द्धिसप्राप्ताय धूपं निर्वपामि स्वाहा ।।
ॐ ह्री सुरमन्यवे सप्तर्द्धिसप्राप्ताय फलं निर्वपामि स्वाहा ।।
ॐ ह्री सुरमन्यवे सप्तर्द्धिसप्राप्ताय अर्घं निर्वपामि स्वाहा ।।

शांतये शांतिधारा । दिव्य पुष्पाजलिं क्षिपेत् ।।

प्रकटितपृथुपंथा साधुसर्वांगवेत्ता ।
विपुलविमलर्कार्द्धिर्लोकसंदेहहर्ता ॥
मुदितसुधरणीशंश्रोयुतो मन्युराहो ।
विपुलघनजमुख्यैस्तप्तदाब्जं यजेहम् ॥ २ ॥

ॐ ह्रीं सर्वोपद्रव - चौरारिमारि-रोग-डाकिनी - शाकिनी - कुष्ठवन्हि-गदराद्युद्भवाल्पमृत्युविनाशनाय विपुलविमलयुक् श्रीमन्यवे अत्र अवतर अवतर संवौषट् स्वाहा । अत्र तिष्ठ तिष्ठ ठ ठ स्थापनं । अत्र मम सन्निहितो भव भव वषट् स्वाहा । पुष्पांजलि ॥

ॐ ह्रीं विपुलविमलयुक् श्रीमन्यवे जल निर्वपामि स्वाहा ॥
ॐ ह्रीं विपुलविमलयुक् श्रीमन्यवे गंध निर्वपामि स्वाहा ॥
ॐ ह्रीं विपुलविमलयुक् श्रीमन्यवे अक्षतान् निर्वपामि स्वाहा ॥
ॐ ह्रीं विपुलविमलयुक् श्रीमन्यवे पुष्प निर्वपामि स्वाहा ॥
ॐ ह्रीं विपुलविमलयुक् श्रीमन्यवे नैवेद्य निर्वपामि स्वाहा ॥
ॐ ह्रीं विपुलविमलयुक् श्रीमन्यवे दीपं निर्वपामि स्वाहा ॥
ॐ ह्रीं विपुलविमलयुक् श्रीमन्यवे धूप निर्वपामि स्वाहा ॥
ॐ ह्रीं विपुलविमलयुक् श्रीमन्यवे फल निर्वपामि स्वाहा ॥
ॐ ह्रीं विपुलविमलयुक् श्रीमन्यवे अर्घ्य निर्वपामि स्वाहा ॥

शांतये शांतिधारा । दिव्य पुष्पांजलि क्षिपेत् ॥

नतचरणसरोजखण्डलो खण्डमूर्तिः ।
निचयचरणसल्लोकात्तशुभ्रप्रकीर्तिः ॥
जयति भुवनरोगं खेल्लकं यस्य चाये ।
जलदज शुभं मुख्यैस्त मुदा मुवितराजं ॥ ३ ॥

ॐ ह्रीं नष्टविनोद्राविन-सर्वोपद्रव कुष्टादि पिशाचादि वित्श्रीनिपाय अत्र अवतर अवतर संवौषट् स्वाहा । अत्र तिष्ठ तिष्ठ ठ ठ स्थापनं । अत्र मम

